तथा,—

"परप्राणोपघातार्थे परद्रव्यापहारतः।
विशिष्टोऽनृतवादस्तु न वृथाकथनादिषु"॥

अत्र विशेषमाह मनुः,—

"[१]बहूनां हि वधो यत्र तत्र साध्वनृतं वदेत्"।

यत्र साक्षिणः [२]सत्यवदनेन द्विजानां वधः शंक्यते। तत्र साक्षी मिथ्या ब्रूयात्। इदं च न्यायमूलं, [३]सत्यवदनस्य मरणानुकूलव्यापाररूपत्वेन हिंसात्वात्, तस्यां च [४]दोषभूयस्त्वात्, साध्वनृते दोषाल्पत्वादेव कर्त्तव्यं। [५]न साध्ववदनस्य विधेयत्वेन निषेधाविषयत्वं, मिथ्या हि निषिध्यते सत्यं त्वर्थप्राप्त्यर्थं न विधेयम्।

सत्य[६]वदनस्य प्रियरूपस्य च श्रातकव्रतत्वेन विधेयत्वं नाप्रियस्य, तेन ब्राह्मणादिवधानुकूलसाक्षिसत्यवाक्यस्य निषिद्धत्वात्, न [७]सत्यानृतवदनस्य निषिद्धत्वेऽपि दोषान[८]ल्पत्वात् कर्त्तव्यत्वं, तथा च प्रायश्चित्तं सारस्वतोऽष्टिः स्मर्यते, एवं साक्षिव्यतिरेकेणापि वर्णवधानुकूलसत्यवचनं निषिद्धं। "यस्त्वनृतान्याङ्कुरपातकानीति" वचनं, तत्र प्रतिप्रसवादेव निषेधाभावात् पातकाभावः, तथा च, तत्र प्रायश्चित्तं स्मर्यते, कामिनि, वत्कर्षार्थवचोऽनृतं महापातकसममिव गमनादित्यतिगर्हितं वर्जनीयं।

---

(१) वर्णिनां। (२) सत्यकथने।
(३) सत्यमूलस्य। (४) दोषभवत्वात्।
(५) नयसाध्वसत्यवचनस्य। (६) सत्यवचनस्य।
(७) तत्र। (८) दोषान्यत्वात्।

मनुः,—

"भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत्"।

प्रथमभद्रपदं अभद्रवस्तुपरं, अभद्रं वस्तु भद्रमित्येवं ब्रूयात् नत्वभद्रमिति, पुष्पं प्रशस्तमिति ब्रूयात् इत्यापस्तम्बवचना-द्भद्रपदं पुष्पप्रशस्तादिपदोपलक्षणं, भद्रमित्येवेत्यनेन पश्चान्तरं पुष्पप्रशस्तादिपदं न वाच्यं भद्रमित्येव वाच्यमित्यन्वयः, आपस्तम्बः,— "अधेनुं धेनुं भद्रमित्येव ब्रूयात्"। धेनुभव्याशब्दो धेनुभविष्यत्यर्थे, धेनुभव्यावाद्युपगमः। पारस्करः, "गर्भिणीं विजन्येति ब्रूयात्, सकुल-मिति न कुलं, कपालमिति कपालं, मणिधनुरितीन्द्रधेनुः"।

महाभारते,—

"पुष्पानां शोभनं पुष्पं वृक्षाणामुद्भता कृषिः।

बहुकारं च वासानां वाक्यं वाक्यां तथा गवां॥

सम्पन्नं भोजनं ब्रूयात् पानीये तर्पणं तथा।

सुशृतं पायसे ब्रूयाद्वाच्यं कृशरे तथा॥

श्मश्रुकर्मणि संप्राप्ते क्षुते स्नाते तु भोजने।

व्याधितानां च सर्वेषामायुष्यमभिनन्दितं"॥

पयद्रव्ये शोभनं पयमिति वाच्यं।

बहुवारं बहुशब्दं गवां मध्ये वाक्यं दातुमिति ब्रूयात्। भोजने-भोज्येऽन्नादौ पानीये पेयद्रव्ये दुग्धादौ। आयुष्यमभिनन्दितं ब्रूयादित्यर्थः।

यमः,—

"जीवेति क्षुवतो ब्रूयाज्जीवितुकः सहेति च"।

हेयमिति उत्तरेण मन्त्रः । सुत्रामा स्थ[1] काननं प्रवेष्टुं कान-नाभिमन्त्रणं, नमो रुद्राय वनसदे स्वस्ति मां पारयेति, पर्वता-रोहणे मन्त्रः । नमो रुद्राय गिरिसदे स्वस्ति मां पारयेति । श्मशानाक्रमणे मन्त्रः । नमो रुद्राय [2]श्मशानसदे स्वस्ति मां पारय, गोष्ठप्रवेशे, नमो रुद्राय सकृत्पिण्डसदे स्वस्ति मां पारय, वस्त्रपात[3] वाताहतौवस्त्रमभिमन्त्रयते, शिवा चासि वज्रोऽसि नमस्तेऽस्तु मा मा हिंसीः, गर्जितमेघमभिमन्त्रयते, शिवा नो वर्षाः सन्तु शिवा नः सन्तु विद्युतः, शिवा नक्षत्रमस्तु यास्यं [4]हनति तूचवन्, शब्दं कुर्वाणां सृगालीमभिमन्त्रयते, शिवा नो नामासि स्वधितिस्तेपिता: नमस्तेऽस्तु मा मा हिंसीः । शब्दायमानं पक्षिणमभिमन्त्रयते ।

"हिरण्यवर्ण! शकुने देवानां प्रहितं शिव! ।
यमदूत! नमस्तेऽस्तु किन्त्वाकार्कशिकोऽब्रवीत्" ॥

चैत्यस्य [5] वृक्षस्याभिमन्त्रणं । मा त्वाशनिर्मा परशुर्मा दण्डो-राजप्रेषितः ।

"अङ्कुरास्ते प्ररोहन्तु निवाते त्वाभिवर्षतु ।
अग्निष्टेमूलं मा हिंसीत् स्वस्ति तेऽस्तु वनस्पते" ॥

स्वस्ति मेऽस्तु वनस्पते" स यदि किञ्चिद्[6]लवादि लभते तत् प्रतिग्रहे मन्त्रः । द्यौस्त्वा ददातु पृथिवी ददातु प्रतिगृह्णा-

(१) सुत्रामाणं । (२) पितृसदे ।
(३) वस्त्रप्रान्तवाताहतौ । (४) हनति ।
(५) देवस्य । (६) द्रोण्युतिलादि न लभते ।

मीति । श्रौदनप्रतिग्रहे एतन्मन्त्र[1]पाठानन्तरं वक्ष्यमाणमन्त्राभ्यां प्राशनं, ब्रह्म प्राश्नामिति प्रथमं, ब्रह्मणाप्राश्नामिति द्वितीयं. अन्न-प्रतिग्रहे प्रतिग्रहानन्तरं प्राशनं, ब्रह्म प्राश्नामिति प्रथमं, ब्रह्म णाप्राश्नामिति द्वितीयं, ब्रह्म त्वापि बन्विति तृतीयं । इतिवाच्यं.

अथावाच्यानि, मनुः—

"अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत्" ।

एतच्चाग्निषोमीयपर्यन्तं तदुक्तं कात्यायनः, नामग्रहण-भोजने स्नातः कुर्वीतेति ।

"शुष्कं वैरं विवादं च न कुर्य्यात्केनचित् सह" ।

वशिष्ठः,— "[2]न म्लेच्छभाषणमिच्छेत" ।

मनुः,—

"ऋत्विक्पुरोहिताचार्यैः मातुलातिथिसंश्रितैः ।
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसम्बन्धिबान्धवैः ॥
मातापितृभ्यां नारीभिर्भ्रात्रा पुत्रेण भार्य्यया ।
दुहित्रा वा सवर्गेण विवादं न समाचरेत् ॥
तन्मादिनैरधिक्षिप्तः न हेता संज्वरः सदा" ।

देवीपुराणे,—

"न कुर्य्याज्जनसंवादं न वैद्यैर्न च वत्सलैः ।
नृपबन्धुगुरुमानभिषक्ज्योतिःपुरोहितैः ।
विरोधेन महद्दुःखं प्रीत्या सुखमवाप्नुयात्" ॥

---

(१) प्राशना । (२) म्लेच्छभाषणं विच्छेत

वस्त्रादयो नृपश्च, ज्योतिः [१]ज्योतिष्कः, विष्णुपुराणे,— नारभेत कलिं प्राज्ञः, प्राग्दोषानुवृत्तौ, देवलः, परुषवचनं, अपवादः, पैशुन्यं, अनृतं, वृथालापः, निष्ठुरं, इति वाङ्मयाष्ट. कुलविद्याचारदोषकथनात्मकं तत्कालक्रोधसन्तापजनकं वचः परुषं, परुषवचनानामेव परोक्षे भाषणमपवादः, गुरुनृपतिबन्धुभृत्यादेः कार्य्यनाशार्थं गुप्तं[२] पैशुन्यं, अनृतं प्रसिद्धं। देशराज्यपराश्रितग्रामक्रीड़ादिविषयं निष्प्रयोजनभाषणं, वृथालापः, गुह्याचार[३]-मैथुनसम्बन्धकीर्त्तनं, असेव्यनामग्रहणं, अमाङ्गल्यशब्दोच्चारणं निष्ठुरं।

विष्णुः,— "न कस्यचिन्मर्मणि स्पृशेत्"।

गोप्यशब्दकीर्त्तनं मर्मशब्दः।

हारीतः,—

"न वेदगुरुब्राह्मणगोपरिवादं कुर्य्यात्"।

आपस्तम्बः,—

"गोदक्षिणानां कुमार्य्याः परिवादांश्च वर्जयेत्"

गोरदक्षिणार्थेऽपि. दक्षिणानां वस्त्रहिरण्यादीनां आप इत्यधिकृत्य।

वायुपुराणे,— "नचैताः परिचक्षीत।

न परिवदेत् तथा नचायुः परिवदेत"॥

---

(१) ज्योतिषिकः।　　(२) जनपादं तु।
(३) गुप्तदोषकथनं।　　(४) गुह्याङ्गमैथुन

तथा,—

तावत्कालं शौचितो (१)भुञ्जानं परिवर्द्देत् । तथा ।
योगं परिवर्द्दयन्तु ध्यानिनं मोक्षकाङ्क्षिणं ।
"स गच्छेन्नरकं घोरं यौतावस्तु न संशयः" ।

महाभारते,—

"सदा नारायणं देवं सर्वपापहरं (२)शुभं ।
निन्दमानो नरः शीघ्रं नरकं प्रतिपद्यते" ॥

वराहपुराणे,—

"विष्णुरुद्रान्तरं ब्रूया, लक्ष्मीगौर्य्यन्तरं तथा ।
सन्ध्यानां मालिकानां च काव्यं शास्त्रं विगर्हितं" ॥

अन्तरं भेदं, काव्यं कविकल्पितं न प्रमाणं ।

यमपैठीनसी,—

"न निन्द्या ब्राह्मणा गावः काञ्चनं सलिलं स्त्रियः ।
पृथिवी च पत्तनानि यो निन्दति स निन्दितः" ॥

यमः,—

"यस्तु निन्द्यात् परं जीवन् प्रशंसत्यात्मनो गुणान् ।
स वै शाड्ढिको नाम ब्रह्मवादिषु गर्हितः" ॥

वराहपुराणे,— घाधिकं, पूर्वभुक्तस्त्रीनिन्दनं च निषिद्धं ।

गौतमः,— न म्लेच्छाशुच्यधार्म्मिकैः सह संभाषेत, संभाष्य (३)पुण्यकृतो मनसा ध्यायेत्, ब्राह्मणेन सह संभाषेत ।

---

(१) वद । (२) प्रभुं ।
(३) शुभकृतो ।

महाभारते,—

"महात्मनां हि गुह्यानि न वक्तव्यानि कर्हिचित् ।
त्वंकारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ॥
अवराणां समानानां उभयेषां न दुष्यति" ।

देवलः,—

"पङ्गुमानिति कुब्जञ्च चाण्डालं ब्राह्मणेति च ।
जुगुप्सा निन्दनं द्वेषात् परुषितं विशिष्यते ॥
वृषलं वृषलेत्युक्त्वा पतितं पतितेति च ।
सत्येनापि सदोषः स्यान्मिथ्या द्विगुण(१)वान् भवेत्" ॥

यमः,—

"प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति ।
प्रत्यादेशो न कर्त्तव्यो रक्षेदात्मानमात्मना ॥
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् ।
पतिपुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनां" ॥

ब्रह्माण्डे,—

"मात्रै द्वेष्टीति चेवं यः प्रब्रवीति दुरात्मवान् ।
अपि ज्ञातिशतं गत्वा न विमुच्येत किल्बिषात्" ॥

शङ्खलिखितौ, "देवेन्द्रधनुश्चन्द्रसूर्यपरिवेशोल्काः परस्मै न कथयेत्, नात्मनः प्रतिकूलं महाजनविरोधं कुर्यात् । गोष्ठीभिः संवध्येत, महाजना वेदार्थज्ञास्तैर्विरोधः, गोष्ठी वृथाकथाः" ।

---

(१) भाग

पैठीनसिः,—

" सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत्परान् " ।

यमः,—

" निधिं परस्य न ब्रूयात् नचचापि न निर्दिशेत् " ।

अद्य द्वितीया, अद्य श्रवणेत्येवं न काम[१]येत् । शङ्खलिखितौ,—
नगरेवागारे चरन्तीं गां धयन्तीं[२] न वक्षीताभ्यसौ, न वाक्षान-
वाक्ष्य[३]तामिति ब्रूयात्, अवाक्ष्य[४] यदि ।

हारीते विशेषः,—

" परस्त्रावतीर्षां नाचक्षीत, पिवन्तं च परवत्सं " ।

तथा, आपस्तम्बः,—

" वर्जयेद्द्वितताभिधानं नचाध्ययन: वर्जयेच्च सुवर्णेषु सूचनं ।

परिभोगं वयोकेषु मत्सरः पुर्वशिष्ययोः "

सूचनं पैशुन्य, परिभोगं पराभवं कृत्वा धनग्रहणं ।

वशिष्ठः,—

न म्लेच्छभाषां शिक्षेत, अष्टादशनरकहेतुकर्माधिकारे ।

हारीतः,—

" पाकव्यमनृतं वादश्रुतिविक्रयश्चेति नाचरानि " ।

एवं विस्पष्टम[५]धीयात्, न शूद्रजनसन्निधावध्ययनं
अनध्यायाध्ययनं च अनूक्तं वर्ज्यं, इत्यवाच्यानि, समाप्तं वाचिकं
पातकव्रतं ॥

---

(१) श्रावयेत् ।
(२) पायन्तीं ।
(३) न वाक्ष्याने वाक्ष्यतामिति ब्रूयात् । (४) अवाक्ष्यं नवादि
(५) सन्निधेयात् ।

अथ मार्ज्जनं, नरसिंहपुराणे,—

"नरसिंहगृहे नित्यं यः सम्मार्ज्जनमाचरेत् ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते" ॥

वराहपुराणे,—

"यावत्कानि प्रहाराणि भूमिसम्मार्ज्जने ददुः ।
तावद्वर्षसहस्राणि विष्णुलोके महीयते" ॥ इत्यादि ।

तथोपलेपने,—

तत्रैव,—

"गोमयं गृह्य वै भूमिं मम वेश्मोपलेपयेत् ।
यावन्ति तु पदान्यत्र समन्तादुपलेपनात् ॥
तावद्वर्षसहस्राणि सङ्गतो जायते तथा ।
यदि द्वादशवर्षाणि लिप्यते मम वेश्मनि ॥
जायते विष्णु[१]के वंशे धनधान्यसमाकुले" । इत्यादि ।

तथा,

"स्थानोपलेपने कार्य्ये सलिलं यो ददाति मे ।
यावन्ति जलबिन्दूनि लिप्यमानस्य सुन्दरि ! ।
तावद्वर्षसहस्राणि विष्णुलोके महीयते" ॥

विष्णु[२]पुराणे,—

"अभ्युक्षणं च यः कुर्य्यात् पानीयेन सुधालये ।
स शान्तपापो भवति— नात्र कार्य्या विचारणा" ॥

(१) विपुले वंशे । (२) विष्णुधर्म्मोत्तरे ।

स्कन्दपुराणे,—

"अगम्यागमने पापमभक्ष्यस्य च भक्षणे ।
सर्वं तत्त्राणमाप्नोति मण्डशिला कुर्वेद्यदि" ॥

तथा,—

"सा[1]रक्तं वर्त्तिकोपेतं स्वस्तिकैश्च विभूषितं ।
देवदेवस्य कुरुते[2] जयते भुवनत्रयं" ॥

नरसिंहपुराणे,—

"निर्माल्यमप[3]नीयाथ तोयेन स्नाप्य केशवं ।
नरसिंहाकृतिं राजन् सर्वपापैः प्रमुच्यते" ॥

तथा,—

"यवगोधूमजैश्चूर्णैरुद्वर्त्त्योष्णेन वारिणा ।
प्रक्षाल्य देवदेवेशं वारुणं लोकमश्नुते" ॥

भविष्यपुराणे,—

"यावन्तः पांशुकणिका मार्ज्जने भास्करालये ।
दिनानि दिवि तावन्ति तिष्ठत्यस्तमलो नरः" ॥

तथा,—

"शिवस्याप्यापनयनं पुष्पाणां तत्र मार्जयेत् ।
एकैकं तत्र तुल्यं स्याच्चान्द्रायणफलेन तु" ॥

एवमन्येषामपि देवानां स्नानमार्जनादीनि तत्तत्शास्त्रोक्तानि ।

---

(१) प्राकृतं वर्तिकोपेतं । (२) क्रीडते भुवनत्रये ।
(३) मपनीय ।

मनुः,—

"धारयेद्वैणवीं यष्टिं सोदकं च कमण्डलुं" ।

तथा,—

सुवर्णरजतमुद्रिकाधारणं पूर्वमुक्तं, दर्भवटुकधारणं च ।

मनुः,—

"न कुर्वीत वृथाचेष्टां नवार्य्यञ्जलिना पिवेत्" ।

तथा,—

"न मृत्लोष्टं च मृद्नीयान्न च्छिन्द्यात् करजैस्तृणं" ।

तथा स्वयं नोपानहौ हरेत् हस्तेनेति शेषः ॥

तथा,— न पाणिस्थं भुञ्जीत ।

तथा,—

"न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ।

न स्पृशेच्चैतदुच्छिष्टो न च स्नायाद्विनाततः ॥

केशग्रहान् प्रहारांश्च शिरस्येतान् विवर्जयेत् ।

न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतितः ॥

न स्पृशेत् पाणिनोच्छिष्टो-विप्रगोब्राह्मणानलान् ।

स्पृशेत तान् शुचिर्नित्यमद्भिः प्राणानुपस्पृशेत् ॥

गात्राणि चैव सर्वाणि नाभिं पाणितलेन तु" ।

कण्डूयेदात्मनः शिरः ।

"अनातुरः स्वानिखानि न स्पृशेदनिमित्ततः ।

रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत्" ॥

न पाणिपादचपलः

देवीपुराणे,—

"नैवाञ्जनं निषेवेत्तु दन्तधावनपूर्वकं"।

विष्णुपुराणे,—

"न कुर्य्यात् वस्त्रसंघर्षं न स्त्रीश्चाव नासिकां"।

महाभारते नन्द्याधिकारे,—

"ब्राह्मणैः कारयिष्यन्ति वृषलाद्दन्तधावनं"।

नाङ्गनखवादनं कुर्यात्, न पाणिना जलमभिहन्यात्, नेष्टकाभिः फलानि पातयेत्, न फलैः फलानि, तथा छेदन भेदन लेखन विमर्दन विद्लनास्फोटनादिनाकस्मात् कुर्यात्। अवस्फोटनं हस्ताद्यङ्गस्य विस्फोटनं॥

आपस्तम्बः,— "पृष्ठतश्चात्मनः पाणिं न सन्धयेत्। गोब्राह्मणस्पर्शनवर्ज्जानुवृत्तौ स एवाह— "हस्तेन[१] धारणात्"।

वृद्धशातातपः,—

"उद्धृत्य वामहस्तेन यत्तोयं पिवति द्विजः।

सुरापानेन तत्तुल्यं मनुराह प्रजापतिः"॥

वशिष्ठः,— "अग्निमापद्य न च युगपद्धारयेत्, । नानाग्नि[२] सन्निपातं वर्ज्जयेत्," सन्निपातः संसर्गः, अयं[३] लौकिकाग्नि विषयः, वैदिकाग्नौ तु संसर्गविशेषात् प्रायश्चित्त विशेषः।

पैठीनसिः,—

"प्राणिनो हिंसितव्याश्च क्लिष्टपातं तु वर्ज्जयेत् क्लिष्टपातं बहुक्लेशपूर्वकं।

(१) हस्तेन वाकारणात्। (२) नानाग्निनां। (३) च।

"तावत्पुरे तथा[1]शक्तं गोकुलश्रीकुमारके ।
पुष्करानोदकस्थाने सा[2]व्वावाहयेन तु ॥

निजनिधि[3]प्राप्तौ तथैव पुनरर्पयेत् । परस्परे पशून् गोस्थान-दर्भचर्णोवाच योजयेत् ॥

"नरबाधां न कुर्वीत जलवातायनादिभिः ।
सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत्" ॥

जलायनं प्रणालीं, वातायनं गवाक्षं, भिक्षार्थं भिक्षावृत्त्यर्थं, तथाप्रसिद्धमग्निं हस्ताभ्यां न स्पृशेत् ।

यमः,—

"न वस्त्रेण वीजयेत्, यं कंचिदपि" ।

महाभारते,—

"देवसान्यापनयनं द्विजोच्छिष्टापमार्जनं
भाकल्पपरिचर्या च गात्रसंवाहनानि च ।
अष्टैकैकं नृपश्रेष्ठ! यो गतो व्यतिरिच्यते" ॥

तथा,—

"कपिलायां च दत्तायां यत्फलं ज्येष्ठपुष्करे ।
तत्फलं भरतश्रेष्ठ! विप्राणां पादधावने ॥
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत् पुष्करपर्णेन पिबन्ति पितरो जलं" ॥

इति "पाक्षिकाणि स्नातकव्रतानि" ॥

---

(१) तथाशक्तं गोगुक । (२) सोमान वाजपेयतु ।
(३) निक्षेपौ ।

अथ पादजानि।

नरसिंहपुराणे,—

"प्रदक्षिणेन चैकेन देवदेवस्य मन्दिरे।

पृथ्वीप्रदक्षिणफलं प्राप्य पश्चाद्धरिं व्रजेत्"॥

वराहपुराणे,—

"यस्तु प्रदक्षिणं कुर्य्यात् साष्टाङ्गं च प्रणामकं।

दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः"॥

भविष्यपुराणे,—

"कृत्वा प्रदक्षिणं भक्त्या शिवस्यायतने नरः।

अश्वमेधसहस्रस्य सुष्ठीष्टस्य फलं लभेत"॥

सूर्य्यमधिकृत्य तत्रैव,—

"कृत्वा प्रदक्षिणं यस्तु नमस्कारं प्रयोजयेत्।

राजसूयाश्वमेधाभ्यां स परं लभते फलं॥

त्रिःप्रदक्षिणं कृत्वा यो नमस्कुरुते रविं।

भूमौ गतेन शिरसा स याति परमां गतिं"॥

एवमन्यदेवानां प्रदक्षिणं।

स्कन्दपुराणे,—

"प्रदक्षिणं यः कुरुते पठन्नाम सहस्रकं।

तुलसीपार्श्वगो नित्यं यज्ञायुतफलं लभेत्"॥

तथाऽश्वत्थप्रदक्षिणं सर्वपापक्षयार्थं। तत्र मन्त्रः,—

"अग्निगर्भ! शमीगर्भ! यज्ञगर्भ! सनातन!।

हिरण्यगर्भ! सोमगर्भ! वेदगर्भ! नमोऽस्तु ते॥

चक्षुःस्पन्दं भुजस्पन्दं दुःस्वप्नं दुर्विचिन्तनं ।
शत्रूणां च समुत्थानं अश्वत्थ! शमयस्व मे ॥
एकादशोऽसि रुद्राणां वसूनामपि चाष्टमः ।
नारायणोऽसि देवानां वृक्षराजोऽसि पिप्पलः ॥
त्वां दृष्ट्वा नश्यते पापं स्पृष्ट्वा लक्ष्मीर्विवर्द्धते ।
प्रदक्षिणाद्भवेदायुः सदाश्वत्थ! नमोऽस्तु ते" ॥

नारदः,—

"लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः" ॥

इत्युपक्रम्य,—

"प्रदक्षिणं तु कुर्वीत तथास्यायुर्न हीयते" ।

मनुः,—

"मृदङ्गं दैवतं विप्रं घृतं मधु चतुष्पथं ।
प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्" ॥

आपस्तम्बः,— "प्रदक्षिणमग्निमाह्रियमाणं नाप्रतिष्ठितं भूमौ । प्रदक्षिणीकृत्योपेयात् । भूमौ स्थापयित्वा प्रदक्षिणीकृत्य गच्छेदित्यर्थः" ।

मार्कण्डेयपुराणे,—

"विद्याधिकगुरुं चैव द्विजः कुर्य्यात् प्रदक्षिणं" ।

शङ्खलिखितौ, प्रदक्षिणं कुर्य्यादित्यनुवृत्तौ विष्णुः,— "अग्निब्राह्मणगणिका-पूर्णकुम्भादर्शच्छत्रध्वजपताकाः श्रीवृक्षवर्द्धमाननन्द्यावर्त्तांश्च तालवृन्तचामराश्वगजान् दधिक्षीरमधुसिद्धार्थकांश्च" ।

वीणाचन्दनायुधादिगोमयफलपुष्पाम्बशाकगोरोचनादूर्वाप्ररोहांश्च उष्णीषालंकारमपि कनकरजतवस्त्रासनयानानि । भृंगारपाण्डु-कुमारीमालाश्च श्रीवृक्षवर्द्धमाननन्द्यावर्त्ताः सन्निवेशविशेषाः । स्वर्णादिरचिता ज्योतिःशास्त्रप्रसिद्धाः, उष्णीषालंकारो मुकुटं" ।

गौतमः,-योगक्षेमार्थमीश्वरमधिकृत्य गच्छेन्नार्थे, अन्यत्र देवगुरु-धार्मिकेभ्यः, अलब्धलाभो योगः । लब्धपरिपालनं क्षेमः, नान्य-मित्यनेनापीश्वरातिरिक्तस्य योगक्षेमसमर्थत्वादेव तत्र गमन-प्रसक्त्याभावेऽप्यती[1]श्वरस्येश्वरपरा योगक्षेमसम्पादकत्वेऽपि न गन्त-व्येति दर्शयति, एवं देवगुरुधार्मिकाणामगन्तव्यत्वप्राप्तौ योगक्षेमा-समर्थत्वेऽपि तेषां धर्मार्थे गन्तव्यत्वमाह अन्यत्रेति ।

"रक्षितारं च राजानं ब्राह्मणं च बहुश्रुतं ।
अभिगम्याथ[2] संपूज्य सद्यः पापात् प्रमुच्यते" ॥

अथ गमनविधिः, याज्ञवल्क्यः,— "अयं मे वज्र इत्येवं[3] मन्त्रं संयगुदीरयन्" । "वर्षातपावृतो गच्छेत्" ।

विष्णुपुराणे,—

"वर्षातपादिके छत्री दण्डी रात्र्यटवीषु च ।
शरीरत्राणकामो वै सोपानत्कः सदा व्रजेत्" ॥

एवं च अयं मे वज्रः, पाप्मानमपहनदिति मंत्रसमाप्तिपर्यन्तम-प्रावृतस्य गमनं । तदनन्तरं छत्रधारणं ।

---

(१) श्वरस्य द्वारा ।   (२) पूज्याय ।
(३) मन्त्रं ।

"नोर्द्ध्वं तिर्यग्विदूरं वा निरीक्ष्य पर्यटेद्बुधः ।
युगमात्रं [1]महीपृष्ठं नरो गच्छेद्वि[2]लोकयन्" ॥

रथारोहणप्रसङ्गे, सारथिना युक्तो रथ इत्युक्ते[3]वर्तेमित्यनेन रथसमीपागमनं । [4]रथान्तरं साम[5]मीति [6]दक्षिणचक्रालम्भः, इन्द्रस्यौष्ठुलस्य वामदेव्यासमीति ईषादण्डाग्रं, रथोपवेशनस्थानाभिमन्त्रणं, अङ्गाऽन्यङ्गा[7]वरतो रथं स्थातुं स्तानमग्निमद्भिः सवनत्सर्वं तं. दूरेहेतिरिन्द्रियावानपतत्रिर्मो[8] अग्नयः पथः पारयन्तु नमो माणिचराय, उपविश्य दक्षिणं धुर्यं प्रतोदेन प्रेरयति, देवालयं दृष्ट्वा दूरादवरोहणं, विप्रनिकटेऽवरोहणं, गवां मध्येऽवरोहणं, [8]मुहूर्त्तमारुह्य जपः, इह रतिरिह रमध्वमा स्वस्ति रति. रथभङ्गशङ्कायां जपः, अयं वामश्विना रथो मा दुर्गमात्स्वोरिषत्, तदाभयं न भवति, वक्रादन्यत्र गमने रथं ध्वजं स्पृष्ट्वा[9] जपः । रथादवरुह्य यत्सोदके दीव्यतामिति मन्त्रात् प्रतिषेधः । हस्त्यारोहणप्रसङ्गे [10]हस्ती यशसमसि वर्चसमसि इन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मां पारय । अश्वारोहणे मन्त्रः, अश्वयशसमसि अश्ववर्चसमसि । इन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्तिमां पारय, निषेधानिककर्णप्रभृत्या गर्दभारोहणे त्वाष्ट्रोऽसि विष्णुदेवत्यः स्वस्ति-

---

(१) महीपृष्ठं । (२) विलोकयन् ।
(३) सविह । (४) रथन्तरं ।
(५) मामीति । (६) रथ ।
(७) रभितो । (८) पिशाचाद्यभिमुखे च दूरात् ।
(९) स्पृष्ट्वा मन्त्रजपः । (१०) हस्तियशसमसि ।

मामं पारय, एवम्[1] गत्वा नौकारोहणे मन्त्रः। शुद्रोऽसि शुद्र-जन्मा आग्नेयो वै हिरण्यरेताः, उत्तरेण स्वस्ति मामं पारय, मार्गाभि-मन्त्रणं, नमो रुद्राय पथि[2]षदे स्वस्ति मामं पारय, चतुष्पथ-दर्शनेऽभिमन्त्रणं, नमो रुद्राय चतुष्पथसदे स्वस्ति मामं पारय।

"न दुष्टं यानमारोहेत् कूलच्छायां न संश्रयेत्।
जनैकशून्यामटवीं गच्छेन्नैव शून्यगृहे वसेत्" ॥

मनुः,—

"नाविनीतैर्व्रजेद्धुर्यैर्न च क्षुद्व्याधिपीडितैः।
न भिन्नशृङ्गाक्षिखुरैर्नैवावालधिविरूपितैः ॥
विनीतैस्तु व्रजेद्धुर्यैराशुगैर्लक्षणान्वितैः।
[3]न वर्णरूपसंपन्नैः प्रतोदे[4]नातुदन् भृशं" ॥
"अविनीतैर्दुष्टैः वालधिविरूपितैश्छिन्ना[5]ग्रकैः"।

तथा, "गवां याने च पुष्टेन सर्वथैव विगर्हितं" एतेन रथ-शकटादिषु गोयानं[6] न निषिद्धं, स्कन्धस्य निषेधात्। अतएव विष्णुः "गोभिर्वाद्यन्ते" अदान्तैरशिक्षितैरिति।

स्कन्दपुराणे,—

"प्रदक्षिणं यः कुरुते पठेत्तस्य सहस्रकं"।
सवत्साविनिषेधादिशिलानां निषेधः।

---

(१) एवमष्टकौ। (२) पन्थसदे।
(३) वर्णवर्णो। (४) नातुदन्।
(५) पुच्छैः। (६) निषिद्धं।

रात्रौ वर्षासु नाम्भो गच्छेद्धारीतवचनात्।

दिवासु च पञ्च[1]सु नरोकेरशक्तावबसिदिवागमने दोषः, तथा, "नातिकल्यं नातिसायं नातिमध्यं दिने स्थिते"।

विष्णुः—

"नैको ध्वानं प्रपद्येत नाधार्मिकैः सार्द्धं न वृषलैर्न द्विषद्भिः।
नासंनिहितपानीयं नातिचूर्णं न संततं"।

असंनिहितपानीयमिति क्रियाविशेषणं। संततं, निरन्तरं प्रतिदिनमित्यर्थः।

मनुः,— "नाज्ञातेन समं गच्छेत्"।

हारीतः,—

पूर्ववृत्तिवृत्त्यर्थं "नासूर्यमध्वानं गच्छेत्, न नियमवेलायां, नानुदको नायज्ञोपवीतः, पूर्ववृत्तिस्तु वृत्तिमानानस्तमये रात्रौ न गच्छेत्। वृत्तिहीनस्तु गच्छेदित्यर्थः", नियमवेला नित्यकर्मकालः।

बौधायनः,—

"विना कमण्डलुं नाध्वानं व्रजेत्, न सामन्तं गृहाद्बहिः। पदमपि गच्छेदिषुमात्रमित्येके, विना कमण्डलुमिति सर्वत्र सम्बन्धः। कमण्डलुग्रहणमुदकोपलक्षणं इषुमात्रादिषु प्रक्षेपणीति देशादधिकः पदमित्यर्थः।

तथा, "न स्त्रिया सह व्रजेत्"।

---

(१) दिवा च पञ्चसु नर्तोकेरशक्तावनसिदिवागमने न दोषः।

देवीपुराणे,—

"नामहायो भवेद्राचौ नोत्पथे न चतुष्पथे"।

शङ्खः, "बाहुभ्यां न नदीं तरेत्, न महावृक्षमारोहेत्"।

आपस्तम्बः,—

"गर्भभयानारोहणरोहणावरोहणानि वर्जयेत्।

न विनार्कं शासयिकीं जले मज्जनक्रियां"।

विष्णुः,—

न "प्रवर्षति धावेत्, न नदीं तरेत् देवताभ्यः पितृभ्यश्चोदकमप्रदाय नदीतरणप्रसक्ते तर्पणं कृत्वैव नदीं तरेदित्यर्थः। न चैतन्नदीतरणनिमित्तं तर्पणं, तथा सत्येकस्मिन् दिने बहुनदीतरणे बहुतर्पणं स्यात्। किं तु नित्यतर्पणस्यैव निमित्तस्य न कालनियमः। तेन प्रथमनदीतरणकाले कृततर्पणो न नद्यन्तरे कुर्यादित्यर्थः। यद्वा, यदि नदीतरणे तर्पयेदिति तर्पणस्य निमित्तत्वं श्रूयेत, तदा प्रकरणान्तरे प्रयोजनान्यत्वमिति निमित्तमुद्दिश्य विधानात् कर्मभेदः स्यात्, इह च स्नानप्रकरणे न नियमोविशेष इति तत्तर्पणात् पूर्वं नदीतरणं निषिध्यते, तेन नियमकालेन तर्पणवेलायामित्यनेन नदीतरणप्रसक्तौ नाप्नोति तर्पणकालात् पूर्वमिवावगन्तव्यं वचनसामर्थ्यवत्, तथा न भिन्नयानेन तरेत्। नौकया भिन्नया।

मनुः,—

"अचक्षुर्विषयं दुर्गं न प्रपद्येत कर्हिचित्।

अदृष्टपूर्वमरण्यं न गच्छेद्दुष्टसत्त्वादिशङ्कया"॥

वशिष्ठः,—

"नाग्निं ब्राह्मणं चान्तरेण व्यपेयात्,"

नान्योर्ब्राह्मणयोः, अनुज्ञाप्य वा व्यपेयात्" ।

पैठीनसिः,—

"न गोब्राह्मणान्तरे व्यपेयात्" ।

यमस्मृतौ, ।

"अग्निहोत्राधानयोरन्तरा गतिनिषेधः" ।

शङ्खलिखितौ,— "दम्पत्योः" ।

बौधायनः,—

"पुरद्वारेन्द्रकीलपरिघावन्तरेण नातीयात् ।

प्रेङ्खयोरन्तरेण न गच्छेत्, इन्द्रकीलं कीलयष्टिः, परिघमर्गलं, प्रेङ्खा आन्दोलिका ।

मनुः,— "न लंघयेद्वत्सतन्त्रीं," वत्सतन्तुः, यः संगच्छेत-गच्छतः,

"अनस्तन्तु व्रजेत् कामं छिद्रकुण्डैककर्म वा ।

कुल्यान-कुलरक्षार्थं लंघयेन्नानिमित्ततः" ॥

कुल्यानकुलं, रटवाङ्कुरं, वद्धं गोष्ठं, अनिमित्ततः प्रयोजनं विना, अद्वारेण नोपेयात् ग्रामं वा वेश्म वावृतं आवृतमन्यदपि देवारामावद्वारेण न गच्छेत् ।

आपस्तम्बः,— न कुसृत्या ग्रामं प्रविशेत्, नमो रुद्राय वास्तोष्पतय इति आम्नातं जपेत्, अन्यां वा रौद्रीं, कुसृत्या कुमार्गेण" ।

शङ्खलिखितौ,— "न वधबन्धनसमयं गच्छेत्, न दावं, न ऋषीणां प्रभवः, न महात्मनां, वधबन्धनसमयं, वधबन्धनार्थं मिलितजनसमुदायं, दावो वनाग्निः। ऋषीणामुपरिस्थानं कलहाय ग्रामादिकमिति माधवस्वामी। शङ्खलिखितौ,— "न बाहै-रपातपानीयैः पयः पिबेत्"।

मार्कण्डेयपुराणे,—

"एकस्यार्थे प्रयोक्ता ये निःस्वकस्वादिक नरं।

अदत्वा खादमश्नाति न दत्ते येऽन्नभोजनाः"॥

विष्णुपुराणे,—

"ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे गतः।

प्रयातो नतति तथा त न कार्य्यं विजानता"॥

देवलः,—

"आर्य्यार्थैभोजने चापि न त्यजेत् सहयायिनः।

देवानृषीनृषीँश्चैव अनुक्रमपदं व्रजेत्"॥

गौतमः,—

"न प्रावृत्य शिरोऽह्नि पर्य्यटेत्, अप्रावृत्य रात्रौ";

देवलः,— "आरुह्यानवाहनं बहिर्निष्क्रमणं च न कुर्वीत, तथा प्रदीपं— रहस्यमस्कमभियायात् त्वरान्वितः"।

वशिष्ठः,—

स्थविरकालान्तरशौचकगणः पन्थाः समाचा म परस्मै देयः, सर्वैरेव यथा ऊह्यमानायाः, यस्मात् शकटादि, ऊह्य-मानाया विवाहकाले"।

मार्कण्डेयपुराणे,—

"मूकान्धबधिराणां च मत्तोन्मत्तकस्य च।

पुंश्चल्याः कृतवैरस्य बालस्य पतितस्य च" ॥

शङ्खलिखितौ,— "पापरोगिगर्भिणीस्नातकप्रव्रजित-विद्यावित् गुणवृद्धेभ्यः पन्था देयः"। देवलः,— "पन्था देयो गवे राज्ञे दुर्बलाय"। आपस्तम्बः,— वर्णानां चेतरैः पन्था देयः, याज्ञवल्क्यः,— पन्था देय इत्यनुवृत्तौ नृपस्तेषामाद्यः स्नातकस्तु महीपते"। अत्र गमनसमये शुभाशुभशकुनानि,—

मत्स्यपुराणे,—

"श्वेताः सुमनसः श्रेष्ठाः पूर्णकुम्भस्तथैव च।

जलजानि च पुष्पाणि मांसमत्स्यास्तथैव[1] च ॥

गावस्तुरङ्गमा नागा बद्धश्च[2]एकपशुस्त्वजः।

त्रिदशाः सुहृदो विप्रा ज्वलितोऽनलस्तथा ॥

गणिका च महाराज! दूर्वा चार्द्रं च गोमयं।

रुक्मं रूप्यं तथा ताम्रं सर्वरत्नानि चाप्यथ ॥

औषधानि च सर्वज्ञ! यवाः सिद्धार्थकास्तथा।

नृवाह्य[3]मानं च भद्रपीठं तथैव च ॥

शङ्खं चक्रं पताकाश्च मृदमायुधमेव च।

राजलिङ्गानि सर्वाणि शवं रुदितवर्जितं ॥

(१) पार्थिवः। (२) दन्त्य-एकपशुस्तथा।

(३) नृवर्द्धमानं यानं च।

घृतं मधु पयश्चैव फलानि विविधानि च।
स्वस्तिकं वर्द्धमानं च नन्द्यावर्त्तं स कौस्तुभं॥
नद्यश्च तत्र विन्यस्ता मङ्गलान्यपराणि च।
अक्षताः श्वेतसुस्नाश्च तथा दर्पण एव च॥
अञ्जनं रोचना चैव सङ्कारो मात्रिकं तथा।
वादित्राणां सुखशब्दो गम्भीरश्च मनोहरः॥
गान्धारः षड्जऋषभौ ये च शस्तास्तथा स्वराः।
मेघः[1] शस्ता घनाः स्निग्धा गजबृंहितनिस्वनः॥
नानुलोमतडित्शस्ता शक्रचापस्तथैव च।
अनुलोमा ग्रहाः शस्ता दिक्पतिस्तु विशेषतः॥
आस्तिक्यं श्रद्दधानत्वं तथा पूज्याभिपूजनं"।

तथा,—

"यानोत्सुकत्वं मनसः प्रहर्षः शुभस्य लाभो विजयस्य वादः।
माङ्गल्यलब्धश्रवणं च राजन् ज्ञेयानि नित्यं विजयप्रदानि"॥

नृवाह्यमानं यानं पुरुषयुक्तदोलादि, भद्रपीठस्वस्तिक-कौस्तुभाः सुवर्णादिघटितसन्निवेशाः। लोमाः[2] दिक्पतिर्यथा पूर्वस्यां रविः।

स्मृतिः,—

"यः कृत्वा तुलसीं गच्छेत् कार्य्यसिद्धिस्तु तस्य वै।

(१) मेघाः।
(२) अनुलोमाः एकस्थाः।

तथा,—

"प्रयाणे चारुगरुडारूढं पारिजातहरं हरिं ।
सत्यया सहितं वन्दे सर्वकामार्थसिद्धये" ॥

अपशकुनानि, विष्णुः,— "नग्नोन्मत्तव्यङ्गान् दृष्ट्वा निवर्त्तेत, वान्तविरिक्तमुण्डजटिलवामनांश्च काषायप्रव्रजित[१]मलिनांश्च । तैलगुडशुष्कगोमयेन्धनतृणपलालभस्माङ्गारकवन्ध्यांश्च, लवणक्लीवासव-नपुंसककार्पासरज्जुकेशांश्च । क्लीबो निरेतस्कः, आसवः मद्यानकं । नपुंसकस्त्रीपुंसलक्षणरहितः ।

मत्स्यपुराणे,—

"औषधानि च युक्तानि धान्यं कृष्णं च या[२]दृशं ।
इन्धनं च तथाङ्गारं लगुडञ्च तथा शुभः ॥
अभ्यक्तं मलिनं मुण्डं[३] तथा नग्नं च मानवं ।
मुक्तकेशं ज्वरार्त्तं च काषायाम्बरधारिणं ॥
वसाः पङ्कस्तथा चर्म केशं उपलमेव च ।
तथैवोद्धृतसाराणि पिण्याकादीनि यानि च ॥
चाण्डालश्वपचादीनां वधबन्धनपालकाः ।
कृन्तकः पापकर्माणो गर्भिणी स्त्री तथैव च ।
तुषभस्मकपालास्थिभिन्नभाण्डानि यानि च ।
रक्तानि चैव भाण्डानि मृतं चाक्रन्दमेव च ॥

(१) काषायप्रवर्त्तितमलिनांश्च ।
(२) पापकं । (३) कुब्जं ।

एवमादीनि चान्यानि न शस्तान्यभिदर्शने।
न शस्तो वाद्यशब्दश्च भिन्नत्वेन च जर्जरः॥
एहीति पुरतः शब्दः शस्यते नैव पृष्ठतः।
गच्छे[1]त्पश्चाद्धर्मशः पुरस्तात्तद्विगर्हितं॥
क्व यासि तिष्ठ मा गच्छ किं ते तत्र गतस्य तु।
एते शब्दा[2]गता निष्टास्ते विपत्तिकरा अपि॥
ध्वजादिषु तथा स्थानं[3] क्रव्यादानां विगर्हितं।
स्खलनं वाहनं चैव वास्त्रभङ्गस्तथैव च॥
शस्त्रध्वजानां शस्त्राणां पतनं च तथाशुभं।
वायुः सशर्करो रु[4]क्षः सर्वदिग्भ्यः समुत्थितः॥
प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विजः।
अनुकूलो मृदुस्पर्शः सुखस्पर्शः सुखावहः॥
रुक्षाश्च स्वरास्तद्वत् क्रव्यादाश्च विगर्हिताः।
अप्रशस्तस्तथा ज्ञेयः परिवेशप्रदक्षिणे॥
दृष्टे निमित्ते प्रथमं माङ्गल्यादिविनाशनं।
शङ्करं पूजयेद्विद्वान् तथैव मधुसूदनं॥
द्वितीये तु तथा दृष्टे प्रताप प्रविशेद्गृहं"।

कृष्णधान्यं तिलमाषादिः क्रव्यादा गृध्राः, अत्र च देवतादि-गमनस्य यातकत्वेन नियमेऽपि, अपशकुनिदर्शनेऽगमनेऽप्यदोषः।

---

(१) गच्छेति। (२) स्तदा निष्टा।
(३) स्थानं। (४) रूक्षः।

शकुनदर्शनलगमने दोषः. उभयदर्शनेऽपि गमनकेवा[१]विशकुन-भूयस्त्वे गमने न दोष इति तात्पर्यं ।

अथ तीर्थगमनं, महाभारते,—

"अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत् फलमवाप्नोति तीर्थाभिगमनेन यत्" ॥

तथा,—

"तान्युपोष्य चिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते ॥
यथा शरीरस्योद्देशाः केचिन्मेध्यतमाः स्मृताः ।
तथा पृथिव्या उद्देशाः केचित् पुण्यतमाः स्मृताः ॥
प्रभावादद्भुता भूमेः सलिलस्य च तेजसा ।
परिग्रहान्मुनीनां च तीर्थानां पुण्यता स्मृता" ॥

अत्र तीर्थानां पुण्यप्रदत्वेन श्रवणा[२]सिद्धस्य च चैतस्य क्रिया-विशेषप्रवेशमन्तरेण फलजनकत्व-उपदेशवैयर्थ्यात् क्रियाविशेषा-पेक्षायां तद्गमन-तन्निवासतत्स्नानतद्दानश्राद्धतर्पणादीनां क्रियाणां फलसाधकत्वं[३]। तथाचाविशेषाद्गमनमपि फलार्थं, न चान्यानर्थक्या-दिति न्यायेनाश्वमेधाज्ञानस्येव गमनस्य निवासस्नानादिकर्माङ्गत्वेन तत्र फलश्रुतिरर्थवादः; ती[४]र्थोत्पन्नस्य विनापि तीर्थस्नानादि-प्रभावे गमनस्य क्रतुज्ञानवत् कर्माङ्ग[५]त्वासिद्धेः ।

---

(१) विशकुन भूयस्त्वे । (२) श्रवणाभाव ।
(३) फलसाधनत्वं । (४) अर्थोत्पन्नस्य गमनं विनापि ।
(५) कर्माङ्गत्वात् सिद्धेः ।

तथा च शङ्खः,—

"तीर्थं प्राप्यानुषङ्गेन स्नानं तीर्थे समाचरे[1]त्।

स्नानजं फलमाप्नोति तीर्थयात्राश्रितं न तु" ॥

इति तीर्थयात्राफलं पृथक् दर्शयति। न च तीर्थयात्राश्रितं तीर्थयात्रापूर्वकं स्नानादिफलमित्येवं परमिति वाच्यं। तीर्थगमनस्य स्नानाद्यङ्गत्वे मानाभावात्,[2] अनैकान्तिकत्वे लिङ्गाभावस्य स्फुटत्वात्, तथा च तावत् फलश्रवणस्य वैयर्थ्यापत्तेः, अत एव लक्ष्मीधरेण स्नानफलं गमनफलं च पृथक् दर्शितं।

महाभारते तीर्थयात्राप्रसङ्गे,—

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतं।

विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते" ॥

हस्तसंयमो अदत्तादानादिनिवृत्तिः, पादसंयमो ऽगम्यदेशगमनादिनिवृत्तिः, मनोविशुद्धिः कुसंकल्पनिवृत्तिः, विद्या तीर्थविधिज्ञानं, तपः उपवासादि, कीर्त्तिः, सच्चरितत्वेन प्रसिद्धिः। तेनाभिशस्तस्य तीर्थफलानधिकारः, अभिशस्त अदोषनिवृत्तिः स्यादेव।

"प्रतिग्रहादुपावृत्तिः सन्तुष्टो येन केनचित्।

अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥

अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः।

विमुक्तः सर्वसङ्गैर्यः स तीर्थफलमश्नुते ॥

---

(१) स्नानं समाचरन्। (२) अन्यथाद्यभावात्।

अक्रोधनश्च राजेन्द्र! सत्यवादी दृढ़व्रतः।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते" ॥

एतच्च तीर्थयात्रामुपक्रम्य महाभारतेऽभिधानात् तीर्थयात्राङ्गं।

मनुः,—

"यस्य हस्तौ च पादौ च मनश्चैव सुसंयतं।
विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥"

इदं तीर्थस्नानाद्यङ्गं यात्राश्रवणाभावेऽपि तीर्थफलप्रतिबन्ध-वचनात्।

वायुपुराणे,—

"तीर्थान्यनुसरन्धीरः श्रद्दधानो जितेन्द्रियः।
कृतपापो विशुध्येत किं पुनः शुद्धकर्मकृत् ॥
तीर्थयोनिं[1] न गच्छेत्तु कुदेशे नैव जायते।
स्वर्गे भवति वै विप्रो मोक्षोपायं च विन्दति ॥
अश्रद्दधानः पापात्मा नास्तिकोऽच्छिन्नसंशयः।
हेतुनिष्ठश्च पञ्चैते न तीर्थफलभागिनः ॥
कामं क्रोधं च लोभं च यो जित्वा तीर्थमाविशेत्
तेन किंचिन्न वा प्राप्तं तीर्थाभिगमनाद्भवेदिति" ॥

ब्रह्मपुराणे,—

"या या क्वाचित्तीर्थयात्रा मुनीन्द्रैः
कृता प्रयुक्ताप्यनुमोदिता वा।
तां ब्रह्मचारी विधिवत् करोति
सुसंयतो गुरुणा चानुयुक्तः ॥

(१) तीर्यंग्योनिं।

सर्वस्वनाशे त्वथवा नृपस्तु स ब्राह्मणानग्रत एव कृत्वा ।
यज्ञाधिकारेऽप्यथवा निवृत्ते विप्रस्तु तीर्थानि परिभ्रमेत ॥
तीर्थे फलं यज्ञफलं तु यस्मात् प्रोक्तं मुनीन्द्रैरमरप्रभावैः ।
यद्यस्ति यज्ञेऽप्यधिकारितातः तस्य वरं गृहं गृहधर्माश्च सर्वे ॥
एवं गृहस्थाश्रमसंस्थितस्य तीर्थे गतिः पूर्वतरैर्निषिद्धा ।
सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानि ने[1]वेति वयं वदामः ॥"

अत्र च नैव सर्वाणि तीर्थान्यपि चाग्निहोत्रतुल्यानीतिवचना-त्तीर्थफलं तीर्थयात्राफलं च श्रौताग्निमतो निषिद्धमिति प्रतिभाति, तन्नु नैव ।

"सदाग्निमान् सपत्नीको गच्छेत्तीर्थानि यत्नतः ।
सर्वपापविनिर्मुक्तो यथेष्टं गतिमाप्नुयात्" ॥

इति वचनेन साग्नेरपि तीर्थयात्राफलकल्पनात् ।

किंतु,– "प्रधानं वैदिकं कर्म गुणभूतमथेतरत् ।
गुणनि[2]ष्ठोऽतिप्रमाणं बाधयन् यात्यधोगतिं" ॥

इति साक्षाद्वेदोक्तकर्मविरोधिस्मृत्युक्तकर्मवर्जनस्य स्नातकव्रतत्वेन गणनात् । दर्शाग्निहोत्रादिकर्मलोपनिमित्तभूतं त्रेताग्निमतस्तस्य तीर्थगमनं निषिध्यते ।

तथा च शिष्टाः,—

"अर्थार्थी प्रवसेद्विद्वान् धर्मार्थी न कदाचन" ।

इति धर्मार्थप्रवासस्य निषेधं स्मरन्ति, तीर्थस्नानादिफलमपि यज्ञादिविरोधि निषिध्यते । अत्राग्निहोत्रसमयेऽग्निहोत्र-

(१) देवेति । (२) गुणाढिष्ठो ।

होमसमत्वा तीर्थस्नानादि[1] कार्यमित्याशयः, एवं तत् श्रौत-विरोधित्वेन तीर्थगमनस्नानादेर्निषिद्धत्वात् यात्रानिषेधातिक्रमेण तीर्थस्नानादिकरणे यात्रानिषेधातिक्रमदोषः स्वल्पः। तीर्थ-स्नानादिफलं च भूयः संपद्यत इति [2]तेषां विकल्पनमसत्कल्पन-मेव, [3]यथा यात्रावत् स्नानादेरपि श्रौतयज्ञ[4]विरोधित्वेन निषेधः। न च विहितस्य निषेधासम्भवः, विहितेऽपि कर्मणि कर्तृविशेषस्य निषेधात्। यथा विहिते सान्नाय्येनासोमयाजी सन्नयेदित्यत्र [5]सोमयाजीकर्तृकनिषेधः। एवमिह तीर्थस्नानादौ यज्ञाधिकारिकर्तुर्निषेधः।

तदुक्तं भट्टैः,—

विधेव [6]ज्ञायते कर्ता विशेषेण प्रतिक्रियां।
योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः॥

न च तीर्थगतिर्निषिद्धेत्युपक्रमात्, यात्राया एव निषेधः। यज्ञाविरोधिमात्रयात्रानिषेधाभावेन यज्ञविरोधितीर्थगमनत्वेन निषिद्धत्वप्रतीत्या यात्रात्वेन विशिष्य विशेषणे वाक्यभेदात्। स्नानाद्युद्दिश्य यात्राया एवं च [7] तीर्थस्नानादेरपि यज्ञविरोधोऽस्त्येव, तथा च, तीर्थं फलं यज्ञफलं। सर्वाणि तीर्थान्यपि चाग्निहोत्र-तुल्यानि [8]नैवेति तीर्थाश्रितकर्ममात्रपरामर्शो दृश्यते।

---

(१) न कार्यं। (२) केषाञ्चित् कल्पनमेव।
(३) यतो। (४) विधि।
(५) असोमयागकर्तृनिषेधः। (६) ज्ञायते।
(७) तीर्थयात्रायां च। (८) चैव।

न च परिकल्प्यर्त्विजं नयेत्येवं, प्रवासविधाने यज्ञानुष्ठान-विरोधाभावः । अल्पप्रस्थानाद्यावेदणांगहीनावश्यकत्वात्, न च स्नानादिप्रधाने । प्रमेयत्वेन बलीयः, निषेधनान्यविषयत्वा-दाचमनादौ निषेधाभावेन वैषम्यात् । न च श्रुतिविरोधे स्मृत्यर्थ-बाधकस्य न्यायसिद्धत्वेनास्य विधेयत्वं, न्यायप्राप्तस्यापि स्नातकव्रत-मध्यपाठेन विधानोपपत्तेः, तस्मात् तीर्थस्नानादिफलमुद्दिश्य श्रौताग्निमतः प्रवासे तीर्थयात्राफलं[1] तीर्थस्नानादिफलं न च भवत्यधिकाराभावात् । ब्राह्मणस्य वैश्यसोमवत् ।

यदा तु,—

"निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा ।
प्रवासे कार्य्यवान् विप्रो तथैव न चिरं क्वचित्" ॥

इति छन्दोगपरिशिष्टात्, आपत्सु प्रोषितोऽग्निहोत्री वाग्यतः प्रतिदिनमग्नीन् मनसा ध्यात्वा मन्त्रेणाहुतं ध्यात्वा व्रतचे-दित्यादि हारीतवचनात् ।

"तुत्कौलीकृतवर्गस्य परिभूतस्य शत्रुभिः ।
मासद्वयं प्रवासोऽस्तु[2] शरणेनाहिताग्निवत्" ॥

इति प्रामाणिकलिखनाच्च प्रवास आपत्काले क्रियते तदा दैवात्तीर्थप्राप्तौ तीर्थस्नानादिफलं स्यादेव, प्रवासस्य तीर्थस्नानाद्यर्थत्वेन यज्ञविरोधाभावात्, यज्ञविरोधि[3] देवतीर्थस्नानादावधिकारो

---

(१) तीर्थयात्रा ।    (२) परतो ।
(३) न्येव ।

[1]वैकल्यते, यथा तीर्थ एवोत्पन्नस्य तीर्थग्रामपरस्य चाहिताग्नेरपि तीर्थस्नानादिफलं यज्ञविरोधाभावादेव।

तथा, मत्स्यपुराणे,— [2]काश्यामधिकृत्य,—

"तत्र चेष्टं हुतं दत्तं तपस्तप्तं कृतं च यत्।

सर्वमक्षयमेवास्मिन् [3]विमुक्ते न संशयः"॥ इति।

चैवे यज्ञादिकर्म दर्शयति, इदं त्रेताग्निमत्परं, केवलं स्मार्त्ताग्नेस्तु तीर्थयात्रा तत्पूर्वकं स्नानादिकं [4]दाननिषिद्धं, धर्मार्थ-प्रवासोऽपि तस्यास्त्येव यज्ञाधिकारवत एव तीर्थयात्रादिनिषेधो न च केवलस्मार्त्ताग्नेर्यज्ञाधिकारोऽस्ति, यज्ञपदस्य त्रेताग्निसाध्ययज्ञ-परत्वात्, अन्यथा पञ्चयज्ञाधिकारस्यार्थ[5] यज्ञादिसाधारणेना-[6]व्यापकत्वापत्तेः। अतएव समाचारोऽप्येवं। सदाचारस्मृत्यो-र्विध्यर्थनिर्णायकत्वेन प्रामाण्यमिति [7]शाङ्करभाष्यप्रदीपे प्रपञ्चित-मस्माभिः, अत्र भारते तीर्थयात्रापदेनोपक्रम्य क्षेत्रपुण्यायतन-यात्रायामपि कथनात्तीर्थपदं स्मृतिन्यायेन पुण्यस्थानोपलक्षणं। तेन पुरुषोत्तमगयाकुरुक्षेत्रादावपि तीर्थयात्राविधिर्ज्ञातव्यः।

ब्रह्मपुराणे,—

"यो यः कश्चित्तीर्थयात्रां तु गच्छेत्, सुसंयतः स च पूर्वं स्वगेहे।

कृतोपवासः शुचिरप्रमत्तः, संपूजयेद्भक्तिनम्रो गणेशं"॥

(१) वैकल्यस्मृतेः।
(२) काश्यां।
(३) वियुक्ते।
(४) वा निषिद्धं।
(५) पंचाग्न्यादि।
(६) व्यावर्त्तक।
(७) शावर।

देवान् पितॄन् ब्राह्मणांश्चैव साधून्,
धीमान् पितॄन् वित्तगतया प्रयत्नात्।
प्रत्यागतश्चाथ पुनस्तथास्तु;
देवान् पितॄन् ब्राह्मणान् पूजयेत्तु" ॥

अत्र [1]उक्तफलकामनया तीर्थयात्रां संकल्प्य स्वगृहे कृतोपवासो गणेशं पूजयेत्, ततोऽभीष्टदेवं पूजयित्वा श्राद्धं ब्राह्मणानां पूजनं, पितॄन् वित्तगत्येत्यनेन धनवता बहुव्ययेन श्राद्धं कार्य्यमित्युक्तं, प्रत्यागत्य पुनर्देवब्राह्मणं श्राद्धं च, एतावत्तीर्थयात्राङ्गमित्यं, यस्य तु प्रत्यागमनं नास्ति ततः प्रभृति तीर्थं एव वासः, तस्य प्रत्यागतदेवपूजाद्यभावः।

यत्तु,—
"विधाय कर्पटीवेशं कृत्वा ग्रामं प्रदक्षिणं।
ततः प्रतिदिनं गच्छेत् प्रतिग्रहविवर्जितः" ॥

इत्यादि[2]गयाश्राद्धाङ्गं, नान्यत्र तत्प्रसक्तिः, प्रयागाद्यतिरिक्ततीर्थगमने यानविषेधदर्शनात्तीर्थान्तरे यानेन गमनेऽप्यविरोध इति लक्ष्मीधरः।

"[3]गयायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि।
मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥
वर्जयित्वा कुरुक्षेत्रं विशालां विरजं तथेति"।

तत्र उपवासः, मुण्डनं शिखावर्जनकेशवपनात्मक कर्त्तृसंस्काररूपं। तीर्थस्नानदानश्राद्धादिरूपकर्म्माङ्गं, यत्तु देवलवचनं,

(१) तत्र। (२) तद्गयायात्राङ्गं। (३) गङ्गायां।

"तीर्थादनुगम्य तदर्थमनभिगम्य व्रतोपवासनियमयुक्तस्त्र्यहमवगाह्य स्नानक्षौराद्युषित्वा सर्वपापैर्विमुच्यते । अभिसन्ध्य भवति तत्तीर्थयात्राप्रकरणाम्नायपृथगेव फलार्थं ।

यत्तु महाभारते,—

"अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गां च दरिद्रो नाम जायते" ॥

तदपि त्रिरात्रोपवासतीर्थाभिगमनकाञ्चनगोदानादीनि दारिद्र्याभावफलानीति ज्ञापयति । तीर्थश्राद्धे विशेषः :—

देवीपुराणे,—

"अकालेऽप्यथवा काले तीर्थे श्राद्धं तथा नरैः ।
प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृतर्पणं ॥
पिण्डदानं च तत् शस्तं पितृणामपि दुर्लभं" ।

तथा,—

"तीर्थेषु ब्राह्मणं नैव परीक्षेत कथंचन ।
सक्तुभिः पिण्डदानं च [१]यावकैः पायसेन वा ॥
कर्त्तव्यमृषिभिर्दृष्टं पिण्याकेन गुडेन च ।
श्राद्धं तत्र प्रकुर्वीत अर्घावाहनवर्जितं ॥
श्वध्वांक्षगृध्रकाकानां नैव दृष्टिहतं च यत्" ।

एवं तत्तद्दानानां तीर्थविशेषात् फलविशेषः । तपःपूजायज्ञादीनां च तीर्थ एव कृतानां फलविशेषः, तर्पणं च पृथक्

(१) संयावैः ।

तीर्थप्राप्तिनिमित्तकं तस्मैव स्नानाङ्गतर्पणमित्युक्त्वा तीर्थप्राप्तिदिने स्नानाशक्तस्यापि [1]तत्स्नानादिपूर्वकं तीर्थप्राप्तिनिमित्तकं तर्पणमावश्यकं।

एवं तस्मिन् दिनेऽनेकतीर्थप्राप्तौ श्राद्धं [2]तर्पणाङ्गं वर्त्तते।

पैठीनसिः,—

"षोडशांशं स लभते यः परार्थेन गच्छति।
अर्द्धं तीर्थफलं तस्य यः प्रसङ्गेन गच्छति॥
प्रतिकृतिं कुशमयीं तीर्थवारिणि मज्जयेत्।
मज्जयेत्तु यमुद्दिश्य अष्टभागं [3]लभेत्तु सः"॥

तत्र मन्त्रः।

"कुशोऽसि [4]संप्रवृत्तोऽसि ब्रह्मणा निर्मितः पुरा।
त्वयि स्नाते स च स्नायाद्यस्यार्थे ग्रन्थिबन्धनं"॥

इतिशिष्टाः।

शङ्खः,—

"नृणां पापकृतां तीर्थे पापस्य शमनं भवेत्।
यथोक्तफलदं तीर्थं भवेत् शुद्धात्मनां पुनः"॥

अथ पादचापल्यं।

मनुः,— "न पाणिपादचपलः," चापल्यं वृथा चेष्टा।

देवलः,— "वह्निं नातिव्रजेत्पदा," गौतमः,— "न पदा आसनमाकर्षेत्"।

---

(१) मन्त्र। (२) तर्पणं च।
(३) लभेत सः। (४) संपवित्रोऽसि

शङ्खलिखितौ,— "न पदा भूमिमभिहन्यात्," आपस्तम्बः,— "पदा [१]पादसंक्षालनमधिष्ठानं च वर्जयेत्, [२]प्रेङ्खोलनं पादयोः जानुनि [३]"अत्याधानं जंघायाः"। [४]प्रेङ्खोलनमितस्ततश्चालनं, शङ्खलिखितौ,— "न पादं पादेन चालयेत्, न दर्भैः परिमृज्यात्," विष्णुः,— "न पादौ प्रतापयेत्, न कांस्यभाजने पादौ धावयेत्"।

आपस्तम्बः—

"अग्निमापो ब्राह्मणं गां देवताद्वारं प्रतिवातं।
शक्तिविषयेणाभिप्रसारयेत पादाविति श्रेयः"॥

याज्ञवल्क्यः,—

"गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत्।
नाग्निं गां ब्राह्मणांश्चैव पादेनाधितिष्ठेत्"॥

आपस्तम्बः,—

"देवतानां राज्ञश्च ब्राह्मणस्य पादस्पर्शनं वर्जयेत्"।

आपस्तम्बः,—

"अतिक्रामेन्न [५]अन्तरौ ज्वलन्तं ज्वलनं तथा,
वृद्धप्रवाहं न लंघयेदित्यर्थः"।

तथा,—

"नाग्नौ प्रक्षिपेदग्निं न च पादौ प्रतापयेत्।
अधस्तान्नोपदध्याच्च न चैनं पादतः कुर्यात्"॥

---

(१) पदस्य चालनं। (२) प्रेङ्खोलनं। (३) गत्याधीनं। (४) प्रेङ्खोलनं। (५) ज्वलन्तौ।

अग्निना प्रयत आसीत्, इषुमात्रादित्यर्थे। न चैन-मुपधमेत्। खट्वायां नोपदध्यात्, इषुमात्रदेशादशुचिर्नाग्निसमीपं गच्छेदित्यर्थः।

पैठीनसिः,— "नापुष्पितं वृक्षमारोहेत्"।

विष्णुपुराणे,—

"प्रदीप्तं वेश्म न विशेन्नारोहेत् शिखरं तरोः"।

याज्ञवल्क्यः,—

"गोब्राह्मणानलान्नानि नोच्छिष्टोऽपि पदा स्पृशेत्"।

विष्णुपुराणे,—

उपतिष्ठेन्नवव्यालांश्चिरं तिष्ठेन्नरोऽस्थितः[1]।

अतीव जागरस्वापौ तद्वत् [2]स्नानासिके बुधः॥

न सेवेत तथा शय्यां व्यायामं च नरेश्वरः।

दंष्ट्रिणः शृङ्गिणश्चैव प्राज्ञो दूरेण वर्जयेत्॥

अवश्यायं च राजेन्द्र! पुरो वातातपौ तथा"।

देवलः,— "पर्वतेष्वपदं पदा, अग्नौ न प्रक्षिपेदग्निं नाग्निं प्रशमयेत्तथा अस्थानाक्रमणानधिष्ठयानि"।

मनुः,—

"देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा।

नाक्रमेत् कामतश्छायां बभ्रुणो दीक्षितस्य च"॥

बभ्रुः कपिलः।

---

(१) न चोत्थितः। (२) स्नानासने

तथा,—

"नर्मदिनेऽर्द्धरात्रे च श्राद्धं भुक्त्वा च सामिकं ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथं ॥
उद्वर्त्तनमपस्नानं विण्मूत्रे रक्तमेव च ।
श्लेष्मनिष्ठ्यूतवान्तानि नाधितिष्ठेत कामतः ॥
वैरिणं नोपसेवेत सहायं चैव वैरिणं ।
अधार्मिकं तस्करं च परस्यैव च योषितं" ॥

उद्वर्त्तनं कृतमलापकर्षणमिष्टादि, अपस्नानं स्नानोपयुक्तजलं, निष्ठ्यूतमुद्गीर्णं ताम्बूलादि, यमस्मृतौ,— प्राज्ञः सति कपिलगवां छायां नाक्रमणायेत्यधिकं, प्राज्ञः प्रशस्तबुद्धिः, क्षत्रियादिरपि, याज्ञवल्क्यीये[१], स्नातक परलोकछायां नाक्रमेदित्युक्तं ।

यमः,—

"स्वकीयां नाक्रमेत् छायां क्लीवेन पतितेन च ।
चाण्डालेन द्विषद्भिश्च नित्यं रोगान्वितेन च" ॥

शङ्खलिखितौ,— "नोद्धत कुहकैः सहैकतस्तिष्ठेत्," उद्धतोऽविनीतः, कुहको वशीकरणादिपरः, विष्णुः,— "चतुष्पथमधितिष्ठेन्न च रात्रौ वृक्षमूलं, न शून्यालयं, शूनावन्धनागारं," हारीतः, आवपनापमार्जना च, स्नाने तु न भस्मास्थिकपालकेशसंचयान्नाधितिष्ठेत्, आवपनं द्रव्यस्थानयोग्यं गोष्ठादि, अपमार्जनां मार्जनानन्तरं तत्साधनकुशादि, कपालं खर्परः,

(१) याज्ञवल्क्यः,—।

शङ्खलिखितौ, नार्त्तेः[1] पदमधितिष्ठेत्, न केशकपालभस्मास्थि-तुषसंस्कारकूटेषु तिष्ठेत्, संस्कारो मार्जित[2]धूल्यादिसमूहः, मनुः,— नाधितिष्ठेत् कार्पासास्थिकार्पासबीजं, नाधितिष्ठेदित्यनुवृत्तौ ।

मार्कण्डेयपुराणे,— जीर्णानि[3] रज्जुवस्त्रादिकानि च ।

विष्णुपुराणे,—

"चतुष्पथचैत्यतरुश्मशानोपवनानि च ।
दुष्टस्त्रीसन्निकर्षञ्च वर्ज्यानि निशि सर्वदा" ॥

तथा,

"स्नानार्द्रां धरणीं चैव दूरतः परिवर्ज्जयेत् ।
श्लेष्मविण्मूत्ररक्तानि सर्वदैव न लंघयेत्" ॥

देवीपुराणे,—

"शून्यागारे न तिष्ठेत न च पर्वतमस्तके ।
न श्मशानेषु देवानां प्रासादेषु कदाचन" ॥

प्रासादेऽपि मनुष्यान्तरशून्ये ।

तथा,—

"न चैव गोः प्रसूतायाः विश्वसेत् क्रोधनस्य च
न मुखेन धमेदग्निं न च खड्गं विलंघयेत् ॥
तथा चैवायुधान् सर्वान् न चोपस्करमार्जनीं
न प्रमत्तजनाकीर्णे न च स्त्रीबालकेलिते ॥
हट्टे वासागमं कुर्याद्दिवास्त्रीसङ्गमं च न" ।

(१) नार्त्तः । (२) तृणधूल्यादिसमूहः । (३) शीर्णानि ।

मार्कण्डेयपुराणे,—

"नोत्कृष्टशय्या[1]शयनो न निकृष्टस्य चारोहेत।

नोद्यानादौ विकालेषु प्राज्ञस्तिष्ठेत्कदाचन" ॥

इत्यनाक्रमणीयान्यधिष्ठेयानि, समाप्तानि पादजानि स्नातकव्रतानि, पायुजानि पुरीषोत्सर्ग व्याख्यातानि, अथोपस्थजानि, तत्र स्वयापाकरणे प्रजोत्पादनं। बौधायनः, प्रजाकामस्योपदेशाः[2], प्रजननिमित्ता समाख्येत्यश्विनावूचतुः।

"आयुषा तपसा युक्तः स्वाध्यायेज्यापरायणः।

प्रजामुत्पादयेद्युक्तः स्वे स्वे वर्णे जितेन्द्रियः" ॥

प्रजननं प्रजोत्पादनं, तन्निमित्ता समाख्या कुलख्यातिः आयुषा आयुष्येण दीर्घसन्ध्योपासनविप्रा[3]शब्दादि— वर्त्तनादिकर्मणा, तपसा नियमेन पुत्रकामव्रतादिना, अनन्तव्रत-कृष्णाष्टमीव्रत-दूर्वाष्टमीव्रतादिना, स्वाध्यायः पुत्रकामस्य महारुद्रजपादिरूपः, सौभरिसन्तसन्तानगोपालमन्त्राभ्यासादिर्वा, इज्या द्वादशाहादिचित्रादि प्रजाकामयागाः, चातुर्मास्यं वैश्वदेवपूर्वं[4] रूपं प्रतिकामसाग्नेयं च, एतच्च पुत्रोत्पादनविलम्बो[5]युक्तः, यत्नवान् तेन वैद्यशास्त्रोक्त औषधादियोगोऽपि, हरिवंशश्रवणादिश्च, पुनर्बौधायनः,— विज्ञायते-जायमानो ब्राह्मणस्त्रीभिरृणवान् जायते, ब्रह्मचर्य्येण ऋषिभ्यो यज्ञेन-देवेभ्यः प्रजया पितृभ्य एवमृणसंयोगं वेदो दर्शयति, तथा स पुत्रमुत्पाद्य तारयति।

(१) सत्ययोर्न—। (२) उपदेशः। (३) विप्रापवाद—।
(४) पर्व्वं—। (५) विलम्बे युक्तः।

"अन्नावरान् सप्तपूर्वान् षडन्यानात्मसप्तवान्"।

विष्णुवसिष्ठौ,—

"ऋणमस्मिन् सन्नयति अमृतत्वं च गच्छति।

पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखं"॥

पुत्रस्य जातस्य ऋणापाकरणयोग्यस्य इति भर्तृयज्ञः, ऋणं संनयति संक्रामयति, शङ्खलिखितपैठीनसयः,—

"यत्र क्वचन जातेन पिता पुत्रेण नन्दति।

तेन चानृण्यतां याति पितॄणां पिण्डदेन वै"॥

यत्र क्वचन वीर्यक्षत्रिययोरन्योन्यसमयपूर्वकं पारक्षेत्रेणेति लक्ष्मीधरः।

बृहस्पतिः,—

"पुंनाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः।

मुख(१)संदर्शनेनापि तदुत्पत्तौ यतेत सः"॥

एतत्पुत्रोत्पत्तिमात्रफलं, हारीतः,—

"यस्य पुत्रः शुचिर्दक्षः पूर्वे वयसि धार्मिकः।

नियन्ता चात्मदोषाणां सन्तारयति पूर्वजान्"॥

शङ्खलिखितौ,—

"अग्निहोत्रं त्रयोवेदा यज्ञाश्च बहुदक्षिणाः।

ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोडशीं॥

पुत्रपौत्रप्रतिष्ठस्य बहुपत्यस्य जीवतः।

अस्कन्दन् देवयज्ञस्य अक्षयाणं त्रिविष्टपं॥"

(१) मुखसंस्पर्शनेनापि।

ज्येष्ठपुत्रप्रसूतस्य प्रथमं पुत्रजातः, पिण्डोदकक्रियाहेतोः।
मनुशङ्खलिखितविष्णुवशिष्ठहारीताः,—

"पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपं" ।

शङ्खलिखितौ,—

"सन्तानवर्द्धनं पुत्रमुद्युक्तं पुत्रकर्मणि[1] ।
देवब्राह्मणसंपन्नः देवब्राह्मणपूजकः" ॥

वशिष्ठः,—

"पुत्रिणो लोकानपुत्रस्य लोकोऽस्ति श्रूयते ।
अप्रज[2] स्त्रियः सन् गौणा राक्षसाः" ॥

"अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्तनस्य च" ॥

यादृक्तादृक् मुख्यः। पुत्रिकापुत्रादिः, शतपथश्रुतिः,—
"अथ त्रयो वा लोका मनुष्यलोकः पितृलोको देवलोक इति"।

"पुत्रेणैव जय्यो नान्येन न कर्मणा कर्मणा पितृलोको ।
विद्यया देवलोकः, तथा स्वयं वा आत्मा ।

सर्वेषां लोकानां लोकः, यज्जुहोति, यद्यजते स तेन देवानां लोकोऽथ यदनु ब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणामपि"। मनुः, तस्मात् पुत्रमनुशिष्ट-

---

(१) देवब्राह्मणमत्यन्तमभिनन्दन्ति पूर्वजाः ।
सन्तानवर्द्धनः पुत्रः प्रशीतादरविहितः ॥
(२) अप्रजाः अपुत्रिणः सन्तु गौणा राक्षसाः ।

लोक्यमाहुः, तस्मादेनमनुशासति, लोक्यं देवलोकादिप्रापकं, तदेवाह, स यद्यनेन किंचिद[1]क्ष्णया कृतं भवति तस्मादेनꣳ सर्व-स्मात् पुत्रो मुञ्चति तस्मात् पुत्रो नाम, यदारब्धदीर्घव्रतापूर्ण-प्रासादादि, तदक्ष्णया असंपूर्णं कृतं यजमानः [2]प्रमितः, तत्-समापनेन पुत्र एनं यजमानं मुञ्चति, आरब्धासमापनव्रताद्रक्षति. एतच्चाग्निसाध्यकर्मव्यतिरिक्तपरं, अग्निना स्वार्थपरत्वादिति मन्तव्यं, यदप्येतत् संप्रति कर्मशेषभूतं तथा पितृलोकं प्राप्य भाविनाप्यर्थक्य तव्यं हि मनुष्याः प्रथमसमाप्तौत्याधिकविधिकल्पनः; पित्रादि-कृतं पुत्रेण समापनीयमिति कल्प्यते।

बृहस्पतिः,—

"यथा जलं कुप्लवेन तरन्मज्जति मानवः।
तद्वत् पिता कुपुत्रेण तमस्यन्धे निमज्जति"॥

एतावदेकपुत्रोत्पादनं नित्यं, बहुपुत्रोत्पादनमपि स्वस्य संगति-कामनायां द्रष्टव्यं।

तदुक्तं,

"एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः।
तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्"॥

तस्मात् पुत्रस्यानुशासन[3]मवश्यकर्त्तव्यमित्यर्थः, ब्रह्मचर्यं च

(१) किञ्चिदन्यथा —। (२) प्रमितः।
(३) पुत्रस्यानुशासनं अवश्यं कार्य्यमित्यर्थः।

व्याख्यातं, यमेषु, एवं पुरोत्सर्गदेशकालदिङ्नियमादयोऽप्युप-
लक्ष्य स्नातकव्रतेऽवगन्तव्याः ।

अथ घ्राणजानि, तत्र श्रीकृष्णोपभुक्तगन्धमाल्यादिघ्राणं सर्व-
पापक्षयार्थं तदुक्तं,—

"विष्णुनाघ्रातं जिघ्रत तेन शान्तं प्रशंसति च" ।

स्कन्दपुराणे,— "निर्माल्यघ्राणं व्रतदानतुल्यं" ।

विष्णुपुराणे,—

"नासंवृतमुखो जिघ्रेत्[1] श्वासकासौ च वर्जयेत् ।
नोच्चैर्हसेत् सशब्दं च न मुञ्चेत् पवनं बुधः ।
न हि कुर्य्यात् शवं जिघ्रन् शवगन्धो हि सोमजः" ॥

तथा,—

"केशसिंहाणिकोत्सर्गो नान्यकाले प्रशस्यते ।
वह्निमङ्गल्यजप्यादौ न होमे न महाजने" ॥

महाजने जनसमूहमध्ये ।

भविष्यपुराणे,—

"शवास्थि न लङ्घेत स्पृष्टो गन्धं च वर्जयेत् ।
यावदाघ्राति तं गन्धं तावत् पुण्येन युज्यते" ॥

देहनाधिकारे हारीतः,— घ्राणाग्रे समावेष्टयित्वा, पर्य्येष्यगन्ध-
घ्राणशङ्कया ।

शातातपः,—

"अनृतं मद्यगन्धश्च दिवामैथुनमेव च ।
पुनाति वृषलान्नं च सन्ध्या वहिरु[2]पासिता" ॥

(१) जृम्भेत् । (२) वहिःसन्ध्याप्युपासिता ।

लक्ष्मीवाक्यं, हृतपुष्पं न जिघ्रति योषितं।
(१)सोऽयमनुसरमो रोचते नरः।

आपस्तम्बः,—
"औषधीवनस्पतीनाछिद्य नोपजिघ्रेत्"।
तथा,— "जातिभ्रंशकारि घ्रातिरघ्रेयमद्ययोः"॥

(२)अथाशनानि, शिष्टाः,—
"जन्मजन्मान्तराभ्यस्तं पापराशिं विनाशयेत्।
कृष्णोपभुक्तशेषान्नप्राशनं भक्तिचेतसा॥
चान्द्रायणं-सहस्रं च मासोपोषणमेव च।
कृष्णशेषाशनं प्राप्य कलां नार्हन्ति षोड़शीं"॥

तथा,—
"विष्णुनाशितमश्नन्ति तेन पीतं पिबन्ति च।
पादोदकसमायुक्तं तुलसीदलमिश्रितं॥
भक्त्या भुक्तं हरेर्भुक्त्वा हत्याकोटिविनाशनं"।

स्कन्दपुराणे, "नैवेद्यशेषं क्रतुकोटितुल्यं, विष्णुपुराणे, गङ्गामधिकृत्य।
"स्नाताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता।
या पावयति भूतानि कीर्त्तिता च दिने दिने"॥

तथा—
"चान्द्रायण-सहस्रेन्तु यः कुर्य्यात् कायशोधनं।
पिबेद्यश्चापि गङ्गाम्भः समौ स्यातां न वासमौ"॥

(१) न च ने रोचते हरः। (२) अथ दानानि।

तथा,—

"भिक्षान्नं श्रोत्रियान्नं च हुतशेषं च यद्धविः।
प्राशनाग्रा(१)द्धरेत् पापं"।

तथा,—

"सर्वपापविशुद्ध्यर्थं वैष्णवस्य च मन्दिरे।
(२)अश्नीयाद् वैष्णवान्नं तदभावे जलं पिबेत्"॥

"स्नातकव्रताधिकारे मनुः,— "नान्नमद्यादेकवासाः";
"नाश्नीयाद्भार्यया सार्द्धं, न भुञ्जीतोद्धृतस्नेहं।
नाश्नीयात् (३)सन्ध्यवेलायां, नातिसौहित्यमाचरेत्॥
नातिप्रगे नातिसायं, न सायं प्रातराशितः।
नोत्सङ्गे भक्षयेद् भक्षान्, न चार्द्धाञ्जलिना पिबेत्॥
भिन्नभाण्डे न भुञ्जीत, न भावप्रतिदूषिते।
शयनस्थो न भुञ्जीत, न पाणिस्थं न चासने॥
सर्वं च तिलसम्बद्धं नाद्यादस्तमिते रवौ।
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत्॥
न श्रोत्रियतते यज्ञे ग्रामयाजिकृते तथा।
स्त्रिया क्लीबेन च हुते भुञ्जीत ब्राह्मणः क्वचित्"॥

अग्निषोमीयादूर्द्धमपि।

तथा,—

"(४)मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन।

(१) दहेत।
(२) नाश्नीयात्।
(३) सन्धिवेलायां।
(४) मत्तक्रुद्धातुराणां च।

केशकीटावपन्नं च पदा स्पृष्टं च कामतः ॥
भ्रूणघ्नावेक्षितं चैव संस्पृष्टं चाप्युदक्यया ।
पतत्रिणावलीढं च शुना संस्पृष्टमेव च ॥
गवा चान्नमवघ्रातं घुष्टान्नं च विशेषतः ।
गणान्नं गणिकान्नं च विदुषा च जुगुप्सितं ॥
स्तेनगायनयोश्चान्नं तक्ष्णो वार्द्धुषिकस्य च ।
दीक्षितस्य कदर्यस्य बद्धस्य निगडस्य च ॥
अभिशस्तस्य षण्ढस्य पुंश्चल्या दाम्भिकस्य च ।
शुक्तं पर्य्युषितं चैव शूद्रस्योच्छिष्टमेव च ॥
चिकित्सकस्य मृगयोः क्रूरस्योच्छिष्टभोजिनः ।
उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशं ॥
अनर्चितं वृथा मांसमवीरायाश्च योषितः ।
द्विषदन्नं नगर्य्यन्न[1]मवधूतमवक्षुतं" ॥

पर्याचान्तमाचमनस्थानस्थं, अवधूतं मार्जननिकटस्थं, अवक्षुतं क्षुतमभिहितं ।

पिशुनानृतिनोश्चान्नं क्रतुविक्रयिणस्तथा ।
शैलूषतुन्नवायान्नं कृतघ्नस्यान्नमेव च ॥
कर्मारस्य निषादस्य रङ्गावतरकस्य च ।
सुवर्णकर्त्तुर्वेणस्य शस्त्रविक्रयिणस्तथा ॥
श्ववतां शौण्डिकानां च चैलनिर्णेजकस्य च ।
रजकस्य नृशंसस्य यस्य चोपपतिर्गृहे ॥

---

(१) पतितान्न ।

कुर्वन्ति ये चोपपतिं स्त्रीजितानां च सर्वशः ।

अनिर्दशं च प्रेतान्नमतुष्टिकरमेव च ॥

राज्ञान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसं ।

कारुकान्नं प्रजां हन्ति यशश्चर्मावकर्त्तिनः ॥

भुक्त्वातोऽन्यतमस्यान्नममत्याक्षपणं त्र्यहं ।

मत्या [1]भुक्त्वा चरेत् कृच्छ्रं रेतोविण्मूत्रमेव च" ॥

तथावलोक्यानवलोकनीयानि, तत्र दैवतान्यधिकृत्य [2]यद्देन दैवतादर्शनस्पर्शनप्रदक्षिणनृत्यमार्जनादीनामप्युपलक्षणादधिगमनस्य दृष्टे सत्यदृष्ट[3]कल्पनवकाशाच्च भगवद्दर्शनादि लिख्यते । तत्र-सामान्यतस्तावत् ॥

"ये त्रिकालं प्रपश्यन्ति मुखं कृष्णस्य नित्यशः ।

न तेषां पुनरावृत्तिर्विष्णुलोकात् कथंचन ॥

अर्च्चितं केशवं दृष्ट्वा सर्वपापैः प्रमुच्यते ।

पूजितं पूज्यमानं च यः पश्येद्भक्तितो हरिं ॥

श्रद्धया मोदयेद्यस्तु सोऽपि योगफलं लभेत् ।

ये पश्यन्ति नरा विष्णुं हेमभूषणभूषितं ॥

सद्भक्त्या कलौ विप्र [4]पुनात्यासप्तमं कुलं ।

ये पश्यन्ति सद्भक्त्या पद्मपत्रोपरि स्थितं ॥

भक्त्या पद्मासनाकारं नेराश दुर्लभं पदं ।

चिरस्थं पुण्डरीकाक्षं सविलासं सविभ्रमं ॥

---

(१) भुक्का । (२) चैत्यनेन ।

(३) कल्पनानवकाशाच्च । (४) पुनन्त्या ।

दृष्ट्वा विमुच्यते पापैर्जन्मकोटिषु [1]संचितैः" ।

तथा,—

"देवार्चादर्शनादेव प्रणमेन्मधुसूदनं ॥

स्नानापेक्षा न कर्त्तव्या दृष्ट्वार्चां हितकाम्यया ।

देवतार्चादृष्टिपूतः शुचिर्भवति कौन्तिकः" ॥

अनेनार्चादर्शनाव्यवहितकालीनदण्डप्रणामविधिप्ररोचनार्थेनापि स्वार्थ[2]प्रसिद्ध्यर्थं सर्वं हि मनुष्याः प्रथममङ्गलीत्यादौ विधि-कल्पनवत्, प्रतिमादृष्टिगोचराणामशौचापवादो विधीयते, तेना-शौचशङ्कया प्रणामविलम्बो न कर्त्तव्य इत्युक्तं भवति, स्पृष्टा-मेध्यादिदर्शने तु तत्परिहारः कर्त्तव्य एव, लेपक्षापगममन्तरेण शुद्ध्यभावात् न च स्पृष्टलेपाशौचस्यापवादः, यावदर्थितानुवादा-सम्भवस्याबद्धोचरविधिकल्पनेनोपपत्तौ नानाविधिबाधाकल्पनात् ।

शङ्किताशौचापवादमात्रेणोपपत्तेश्च नातिस्पृष्टाशौचापवाद-कल्पनमर्हन्ति, अत्र पुरुषोत्तमक्षेत्रे वसता देवतागमन[3] कर्त्तव्यं, तद्दर्शनादिविधिरुच्यते ।

ब्रह्माण्डपुराणे,—

"पुरुषाख्यं सकृद् दृष्ट्वा सकृत् स्नात्वा महोदधौ ।

ब्रह्मविद्यां सकृज्ज्ञात्वा न भूयः पुरुषो भवेत् ॥

अत्र पुरुषाख्यं पुरुषोत्तमक्षेत्रं इति केचित् ।

---

(१) सुसंचितैः ।

(२) स्वार्थप्रसिद्धभावादर्थसिद्ध्यर्थं ।

(३) कथावलदेवाद्यायतनगमनं ।

वामनपुराणे, प्रह्लादतीर्थयात्रायां,—

"स्नात्वा विरजसे तीर्थे दत्त्वा पिण्डं पितॄंस्तथा ।
दर्शनार्थे ययौ श्रीमान् पूजितं पुरुषोत्तमं ॥
तं दृष्ट्वा पुण्डरीकाक्षमक्षरं परमं शुचिः ।
उपोष्य षड्दिनान्येव माहेन्द्रं दक्षिणं ययौ" ॥

तथा, विष्णुपुराणे,—

"ब्रह्माक्षरमजं नित्यं यथासौ पुरुषोत्तमः" ।

इति कृष्णमूर्त्तेरेवाभिधानं ।

ब्रह्मपुराणे,—

"दृष्ट्वा [1]च तं वैनतेयं यः पश्येत् पुरुषोत्तमं ।
दशानामश्वमेधानां फलं प्राप्य हरिं व्रजेत्" ॥

वटदर्शने,—

"ॐ नमो व्यक्तरूपाय महाप्रलयधारिणे ।
महद्रसोपविष्टाय न्यग्रोधाय नमो नमः ॥
अमरस्त्वं सदा [2]कल्प ! विष्णोरायतनं वट ! ।
न्यग्रोध ! हर मे पापं कल्पवृक्ष ! नमोऽस्तु ते ॥
भक्त्या प्रदक्षिणं कृत्वा नत्वा [3]कल्पवटं नरः ।
सहसा मुच्यते पापैर्जीर्णत्वचमिवोरगः ॥
छायां तस्य समाक्रम्य कल्पवृक्षस्य भो द्विजाः ।
ब्रह्महत्यां नरो जह्यात् पापेष्वन्येषु का कथा" ॥

(१) वटं । (२) वृक्ष ! । (३) कल्पद्रुमं ।

